

श्रीपरमात्मने नमः ।

# सनातनजैनग्रंथमाला

३

श्रीमद्भगवत्कुंदकुंदाचार्यविरचितं



# समयप्राभृतं

तात्पर्यवृत्ति-आत्मख्यातीतिटीकाद्वयोपेतं

न्यायशास्त्रिणा श्रीयुत-पंडितगजाधरलालजैनेन संपादितं ।

तच

उस्मानाबादनिवासि-स्वर्गीयश्रेष्ठिवर्यगांधीकस्तूरचंद्रस्यात्मजबालचंद्रस्य स्मरणार्थं

काशीस्थ-भारतीयजैनसिद्धांतप्रकाशिनीसंस्थाया व्यवस्थापकेन

श्रीपन्नालालजैनेन

काशीस्थ-चंद्रप्रभानाम्नि मुद्रणालये प्रकाशितं ।

श्रीवीरनिर्वाणसंवत्सरः २४४० ख्रिस्ताब्दः १९१४

प्रथमसंस्करण

मूल्यं रूप्यकचतुष्कं ।

# प्रस्तावना

प्रियमहाभागा —

केचिन्निरवधिविशङ्कटाजवञ्जवजलनिधिनिर्ल्लसितविविधासुखदुर्दनक्रशनूकासजनिनामितभीतिभारप्रचुरचेतस सुचेतस निरहितनिखिलव्यसननिकरसमूलानघस्वस्वरूपाख्य कमप्यालय मवप्समाणा परियावमरनाथाहरहस्तत्समागसमीहयाऽनन्तरत्यनुभूतिगोचरता परिता भुवि । पर पितृपैतामहसमदनादिदुर्वासनानिचितात करणत्वात् वाहलविकात्मतत्त्वावबोधबहिर्भूतसर्वज्ञमन्यस्वार्थिमर्त्यप्रतारितात्मत्वात् कल्पितविफललोकापवादसमुपस्थमानभयाकीर्णत्वाद्वा न नाम चेवयते त आत्मनीनस्वरूप स्वायत्तया । किंतु न तथा निष्पक्षपाताही मनस्विन । न वा तेषा पक्षपातो धर्म । असुमृत्सर्वार्थसमीहितपरिपूरणकल्पमहीरुहा हि सत समादरणीयस्तै निहत्य विकल्प विभाव्यात्मनीनमनीषया समीचीन पन्था । निनिमध्येव समुपलभ्यते प्रकाशपदवी तात्त्विका मत्स्वरूपप्रतिभासकमिद समयप्राभृत ।

समत्वगतिरिव महती विदुषा यत्तच्चान्यथापत्वेषु सांख्यमीमांसाप्रभृतिनैकविधशास्त्रनिकरेषु समवबोधयति यथा याथार्थ्येनात्मन स्वरूप परमात्मप्राप्ति च वेदान्तशास्त्र न तथापर । अनितथ चैतत् पावन्न भवत्यात्मस्वरूपविबोध स्वात्मनि, न विरज्यते तावदनात्मनीननितविनाशसुखदुःखसपद्विरासमा । आत्मस्वरूपावगतिरेव वैराग्य तच्च यदि शिक्षयति तद्वेदान्तशास्त्रमेव कथचित् ।

भारतव्यतिरिक्त इंगलैंडादिदेशानामपि सद्बुद्धौके सप्रति स मानसरार्थ वेदान्तशास्त्र । समाविरमापिसत कियत्यश्चित् परिषदस्तत्र परितो वेदान्तशास्त्रानध्यसिद्धान्तप्रसाराय । मथ्नाति च शेमुषीमथनदण्डेन तत्र-सभृतसमीहया तच्छास्त्रसिद्धान्तक्षीरमहरहस्ते ।

विभाव्य वेदान्तशास्त्रस्य तथाविधविचित्रसन्मानतति, अमलात्मस्वरूपजिज्ञासा च बहुलतया पक्षपातबहिर्भूताना स्वपरहितैषिणा च सुमनीषिणा समुपानीयते कथकथमपि समाविर्भाव्यैतत्समयप्राभृत तेषा पुरस्तात् । समेति समीचीनतया जानातीति समय आत्मा तस्य प्राभृत शास्त्रमित्यनुगतार्थ विभाव्य नामेद ध्यामन एव कृतो विचारोऽत्र शास्त्रे-इति समाविर्भूयते । दिगबरजैनसमाजे प्राभृतमिद जैनवेदान्ताध्यात्मशास्त्रनाम्न्या निश्रुत स्वीयानन्या मत्स्वरूपविवरणशैलीप्रभावात् । नात्र चित्र प्राभृतरचयितु श्रीमद्भगवत्कुन्दकुन्दस्य कीर्तिर्वस्त्रमताद्विभाव्यते । पूर्व जिनागमत समवगम्यात्मस्वरूप स्वात्मना च पश्चादनुभूय स्वपरात्मस्वरूपसमास्वादनसमीहया व्यरचीद महीयान् ग्रन्थ महता प्रयासेन जनसमुदयहिताय तेन भगवता ।

एतच्छास्त्रसमुपवर्णितसिद्धान्ता सर्वथा वेदान्तशास्त्रसमाहितसिद्धान्तसाम्य प्रतिपद्यत इति तु न शक्नुमो वय प्रतिपादयितु यतो हि—आर्हतसिद्धान्त वरीवर्तीति नयद्वयमादिष्ट । तत्र नात्मन परकीय वस्तुनाममात्रादिवस्तु-आत्मनीनमिति हि शुद्धनिश्चयविषय । परकीयवस्त्वपि कथचित्तदधीन बिभर्ति धूमकुम्भादिति व्यवहारविषय । नैतावता ब्रह्म विहाय परवस्त्वेव नास्तीति जैनवेदान्तमत । इतरवेदान्त च वस्तुतस्तु वस्तु ब्रह्मैव तदपर सकल कल्पित ततो न सामस्त्येन जैनवेदान्तेतरवेदान्तयोस्तौल्य । सबन्धमात्रत पर वस्तु नात्मन [ ब्रह्मण ] परवस्तु यात्मत्वाभिमानो मिथ्येति इतरवेदान्तसिद्धान्तस्य सम्मतमेव तज्जैनवेदान्तस्पर्शि । कियता चिदन्येतरवेदान्तसिद्धान्ताना विमतत्वेऽपि सम्मतत्वमपि कियता चिदपर । नात्र धर्मीति सकलोपाधिविरहितत्वेनोपासन तु ब्रह्मण इतरवेदान्तस्य पुष्णात्येव निष्कलस्य तुल्य च जैनवेदान्तस्य ।

विशदतया कियता चित्सिद्धान्ताना समत्वाविर्भावाय व्यचारि मया पर नाशक तथाकर्तुमक्षमनवकाशतया । मत्कुलरामवत् एव या या तुष्युर्विद्वास स्वय चोभयोस्तौल्य विनिर्णीयासुरिति च विनिचाय्य बुद्धावपि

नाधिरभाधि मया तयोस्तुल्यत्वं । ततोनिरवद्यात्मस्वरूपावजिगमिषवो विद्वांसो नियत विचारयेयुरेतत्प्राभृतरहस्यमिति सप्रश्रय तेषां पुरस्तान्ममाभ्यर्थना ।

समयप्राभृतसंपादनकाले आदिमस्यांकस्याविर्भावार्थं तात्पर्यवृत्त्यात्मख्यात्योः पुस्तकद्वयस्य कियांश्चिद्भागः १०८ अभिनवभट्टारक-ईडरस्थ-श्रीमद्विजयकीर्तिजीमहाराजैः प्रेषितं, तात्पर्यवृत्तिद्वयं च जैनमित्रसंपादकश्रीमद्ब्रह्मचारिशीतलप्रसादजीमहात्मभिः प्रहितं आत्मख्यातिपुस्तकैकं च सत्यवादिसंपादकसुहृद्वरविद्वद्वरश्रीपंडित—उदयलालजीमहोदयैः समुपलब्धं ततोऽस्म्यहं गरीयानुपमहभाजनं सश्रुतोक्तमहात्मनां विदुषां च। सर्गीहि चायातिकालीनां तथाविधामेव सकलजनताहितकारिणीमनुकंपामिति ।

कियतीनां चिह्नाथानां परिच्युतत्वादात्मख्यातौ, समुल्लेखाच तासां तात्पर्यवृत्तौ अकृत किल तात्पर्यवृत्त्यनुसार्येव पाठक्रमः श्रीसमयप्राभृतस्य ततोमूलपाठस्तात्पर्यवृत्त्यनुसार्येव विभावनीयः । विषयक्रमोऽपि समयप्राभृतस्य तात्पर्यवृत्त्यनुगामी। चतुर्विंशतितमगाथायस्तादृक्लिखितास्मत्प्रतिद्वाविंशतमाया गाथाया ज्ञातव्या।

भगवत्कुंदकुंदस्वामिनो जीवनेतिवृत्तं प्राकाशि जैनहितैषिसंपादकपंडितश्रीनाथूरामजीमहोदयैः। स्वीये जैनहितैषिपत्रे तदेवेनाधिकीकृत्य समाविर्भावितमत्र । ततोऽस्म्यहमुपग्राह्यो भूयस्तत्कमहानुभावानां ।

नाकार्यमहं कियतां चिह्नस्थानां संपादनमितस्ततो नैमित्तिकस्वास्थ्यवैकल्यतश्च। प्राकाशिषतता, अशुद्धयः शोधनपत्रे तथापि दृष्ट्यविषय भवेत्कापि स्खलनं परिमार्ज्य सत्क्षमनीयोऽहं सुविचारचेतोभिर्मनीषिभिरिति समर्पितमभ्यर्थना ।

साक्षरानुचरो
गजाधरलालः



# श्रीमद्भगवत्कुंदकुंदाचार्याः ।

प्रियपाठकमहाशयाः—

श्रीमन्महावीरजिनवरपरमनिःश्रेयसप्रापणानंतरमजनिषत नैकविधागमपयोमरालायमाना आर्हतमतहर्म्यस्तंभायमानाश्च भुवि गरीयांसोऽनेकविद्वांसः । परं पूज्यतामहत्त्वयोः परमावधिं तेषु भगवान् श्रीकुंदकुंदाचार्य एव समुपालभत । प्रतिवादिकरिनिकरपंचाननायमानैर्गरीयोभिर्विद्वद्भिः समाविरभानि यत्र कुत्रचिदात्मनीनपरिचितिस्तत्र 'वयं भगवत्कुंदकुंदान्वयिनस्तदनुयायिनश्चेति प्रतिपादयद्भिरेव वै. सानंदमनुबोधि स्वीय सौभाग्यं । अद्यत्वेऽपि भगवान् कुंदकुंद. तीर्थप्रवर्तकधर्मसंस्थापकसामान्येनैव दिगम्बरसमाजे प्रतीष्ठाप्यते । आर्हतमतामलतरत्वपवित्रतासंरक्षकस्तु भगवत्कुंदकुंद एवाभून्मुख्य. । दिगम्बरजैनसंप्रदायस्य बहुलतमांशः किल सांप्रतं भगवत्कुंदकुंदजल्पितसरणिशरण एव विभाव्यते, किंतु सहायस्य भगवत्कुंदकुंद. क आसीत् ? कदा, क, परमपावनात्मनीनवैदुष्येण भारतभूमिं विभूषयामास ? इति नाममात्रमपि जानीमो वयं । भक्तिवशानदत्तया तद्विषयं किमपि वृत्तं परिचाययितुं समाश्रयतोऽपि परंपरासरणिं भ्रमाकीर्णत्वात्तस्य नात्मकामना कर्तुं फलवती पारयाम. । ततः परिश्रमत्तमत्वेऽपि भगवत्कुंदकुंदपरिचयसमाविर्भावाय नियतं विद्वद्भिः सुदृढप्रतिज्ञैर्भवितव्यमिति सनति तेषां पुरस्सरमस्माकीनाभ्यर्थना ।

भगवत्कुंदकुंदविषयकं यत्किमपीतिवृत्तं समनुबोधि, समुपानीयते विदुषां पुरस्तात् तदस्माभिरत्र—

## नामविचारः

प्राथमिकं प्रधानञ्चाभिधेयं श्रीमद्भगवत्कुंदकुंदस्य **पद्मनंदीति** । परं विश्रुतिर्बहुलतयाद्यत्वेऽस्य महात्मनः **कौण्डकुंदनाम्ना कुंदकुंदेन** वा । आसीच्चायं **कोण्डकुण्डा**भिधनगरवास्तव्यस्ततोऽनुमीयते नाग रिक्ताभिधेयेवायमागतविश्रुतिं प्रत्यपद्यत । कोण्डकुन्देतिकार्णाटकभाषीयं नाम तस्य श्रुतिकटुकतया संस्कृतकविभिः समस्ति परावर्तितं श्रुतिमधुर**कुंदकुंद**रूपेणेति । **श्रीमदिंद्रनंदि**सूरिभिर्व्यलेखि स्वविरचितश्रुतावतारग्रंथे

> एवं द्विविधो द्रव्यभावपुस्तकगतः समागच्छन्
> गुरुपरिपाट्या ज्ञातः सिद्धांतः **कोण्डकुन्दपुरे** ॥ १६० ॥
> श्रीपद्मनंदिमुनिना सोऽपि द्वादशसहस्रपरिमाणः
> ग्रंथपरिकर्मकर्ता षट्खंडाद्यत्रिखंडस्य ॥ १६१ ॥

अमुना पद्येन श्रीमन्मुनिवरपद्मनंदिवासः **कोण्डकुन्दपुर** एव निश्चीयते । अन्येऽपि समभूवन् भूयांस आचार्याः कार्णाटकदेशे, समुपालेभिरे ये स्वनिवासस्थाननाम्नैव भुवि विश्रुतिं यथा **श्रीतुम्बुलूराचार्य.** । प्राथमिकं नाम श्रीमत्तुम्बुलूराचार्यस्य **वर्धनदेव** आसीत् परं **तुम्बुलूर**ग्रामनिवासित्वादयमाचार्यपादो विश्रुतान् तुम्बुलाचार्याभिधया । निगदितं श्रुतावतारे तदुल्लेखसमये—

**'अथ तुम्बुलूरनामाचार्योऽभूत्तुम्बुलूरसद्ग्रामे'** इति

नवमे दशमे च **श्रवणबेलगुलशिलालेखे** श्रीमत्कुंदकुंदाचार्यस्य समुल्लेखः खलु पद्मनंदि कुंदकुंदेतिनामद्वितयेनैव कृतः । एवमन्यत्रापि । किंतु नंदिसंघपट्टावल्यामस्य पावनात्मनः कुंदकुंद-वक्रग्रीव-एलाचार्य-गृध्रपिच्छ-पद्मनंदीतिनामपंचकमभाणि —

> ततोऽभवत्पंचसुनामधामा श्रीपद्मनंदी मुनिचक्रवर्ती ।
> आचार्यः कुंदकुंदाख्यो वक्रग्रीवो महामतिः ।
> एलाचार्यो गृध्रपिच्छः पद्मनंदीति तन्नुतिः ॥४॥

गृध्रपिच्छ वक्रग्रीव-एलाचार्येति नामत्रिकमन्यदप्यास्ति श्रीमत्कुंदकुंदाचार्यस्येति पट्टावलीस्थपद्यपङ्क्ती-नामासामत्र तात्पर्यं ।

कुतश्चिदसाधारणकारणसंपातात्तिरोभूतत्वात्पुरातनपट्टावलीनां तत्स्थाने—अनुमानतः, कल्पनाव-स्तुतः पूर्वापरविरुद्धमिलितकियत्किंचित्प्राचीनोल्लेखैश्चेमा विरचिताः. स्वस्वमिनत्राः पट्टावल्य शतद्विशतसांव-त्सरिकैर्भट्टारकैः । ततः समुपलब्धाधुनिकपट्टावल्यः सर्वथा सशीतिकारणत्वान्न प्रमाणतामर्चंति । नंदिसंघ-पट्टावल्यपि तथाभूतैव । एवं च तल्लिखितगृध्रपिच्छ इति नाम न भगवत्कुंदकुंदस्वामिनः किंतु भगवदुमा-स्वामिनः-उमास्वातेर्वा । अत्र नैकानि प्रमाणानि संति यथा—

> तत्त्वार्थसूत्रकर्तारं गृध्रपिच्छोपलक्षितं
> वंदे गणींद्रसंजातमुमास्वामिमुनीश्वरं ॥ १ ॥

तत्त्वार्थप्रशस्तिः

> तस्यान्वये भूविदिते बभूव यः पद्मनंदिप्रथमाभिधानः
> श्रीकुंदकुंदादिमुनीश्वराख्य. सत्संयमादुद्गतचारणर्द्धिः ॥ ४ ॥
> अभूदुमास्वातिमुनीश्वरोऽसावाचार्यशब्दोत्तरगृध्रपिच्छः
> तदन्वये तत्सदृशोऽस्ति नान्यस्तात्कालिकाशेषपदार्थवेदी ॥ ५ ॥

४० तमः श्रवणबेलगुलशिलालेखः

> तदीयवंशाकरतः प्रसिद्धादभूददोषा यतिरत्नमाला
> बभौ यदंतर्मणिवन्मुनींद्रस्स कुण्डकुण्डोदितचंडदण्डः ॥१०॥
> अभूदुमास्वातिमुनिः पवित्रे वंशे तदीये सकलार्थवेदी
> सूत्रीकृतं येन जिनप्रणीतं शास्त्रार्थजातं मुनिपुंगवेन ॥११॥
> स प्राणिसंरक्षणसावधानो बभार योगी किल गृध्रपक्षान्
> तदा प्रभृत्येव बुधा यमाहुराचार्यशब्दोत्तरगृध्रपिच्छं ॥१२॥

श्रवणबेलगुलशिलालेखः ।

एतत्प्रमाणातिरिक्तान्यन्यान्यपि–उमास्वामिनो गृध्रपिच्छनामत्वे संति तानि च सकीर्तितानि स्युर्यथाव-सर पुरस्तात् ततोऽनया प्रमाणसरण्या नियतं निर्धार्यते नाभवत् भगवत्कुंदकुंदस्य गृध्रपिच्छ इति नाम ।

विमृश्य प्रतिपादितपट्टावली वक्रग्रीवनामापि कुंदकुंदस्य नोपलभ्यते क्वाप्यन्यत्र, किंतु तन्नाम्नापर एव कश्चिदाचार्यो व्यश्रौषीद्भुवि । श्रवणबेल्गुलमल्लिषेणप्रशस्तौ समुदीरितश्चापि तदुल्लेखः—

> वक्रग्रीवमहामुनेर्दशशतग्रीवोऽप्यहींद्रो यथा
> जातं स्तोतुमलं वचोबलमसौ किं भग्नवाग्मिव्रजं
> योऽसौ शासनदेवताबहुमतो हीवक्रवादिग्रह-
> ग्रीवोऽस्मिन्नथ शब्दवाच्यमवदन्मासान्समासेन षद् ॥ इति ॥

कथितमल्लिषेण प्रशस्तौ च ।

'वंदो विहुर्भुवि न कैरिह कोण्डकुंदः'

इति पूर्वं कुंदकुंदं समुपवर्ण्य ततश्च समंतभद्रं सिंहनंदिनं च समुल्लिख्य पश्चाद्वक्रग्रीवः सस्तुतस्ततो समनुमन्यते भगवत्कुंदकुंदतोऽन्य एव कश्चित् समजनि परवादिगुप्रभारतीग्रीवो वक्रग्रीवो विद्वान् न कुंदकुंद एव वक्रग्रीवः पट्टावलीलेखकाधारात् ।

नोचति किमपि गमकमत्रापि दृष्टिगोचरतां यत्कुंदकुंदस्वामिन एवाभूदेलाचार्य इत्यभिधेयः । किंत्वपर एव कश्चित् सत्यपत्ताऽभिधयानया प्रत्याभवितो विद्वानेलाचार्यः । स चासीच्चित्रकूटपुरवास्तव्य. । तत्समीपे च भगवज्जिनसेनगुरुर्वीरसेनः भाष्येष्ट सुकरतयानधत्सिद्धांतशास्त्र । तत्र गमक–

अथ श्रीकुमारनंदिसैद्धांतिकदेवशिष्यैः प्रसिद्धकथान्यायेन पूर्वविदेहं गत्वा वीतराग सर्वज्ञसीमंधरस्वामितीर्थंकरपरमदेवं दृष्ट्वा च तन्मुखकमलविनिर्गतदिव्यवाणीश्रवणादवधारितपदार्थसमूहैर्बुद्धात्मतत्त्वादिसारार्थं गृहीत्वा पुनरप्यागतैः श्रीमत्कुंदकुंदाचार्यदेवैः पद्मनंद्यपरनामधेयैरंतस्तत्त्वबहिस्तत्त्वगौणमुख्यप्रतिपत्त्यर्थं — अथवा — शिवकुमारमहाराजादिसंक्षेपरुचिशिष्यप्रतिबोधनार्थं विरचिते पंचास्तिकायप्राभृतशास्त्रे यथाक्रमेणाधिकारशुद्धिपूर्वकं तात्पर्यार्थव्याख्यानं कथ्यते-

इति श्रीमज्जयसेनाचार्यकारकल्पमहीरुहखचितसमयसारसंस्कृतटीकालिखितगद्यतश्च पद्मनंदीत्यपराभिधाविभूषितश्रीकुंदकुंदभगवान् कुमारनंदिसैद्धांतिकदेवशिष्य प्रकटीकृत । किंतु मतद्वयमपीदमर्वाचीनतमत्वान्न प्रामाणिकी तथ्यतामवगाहते । यत —

श्रुतावतारे—अर्हद्बलेः पश्चान्माघनंदिनस्तदनंतरं च धरसेनादिगुरूणां समुल्लेखः कृत. न माघनंद्यनंतरं गुणचंद्रस्य नापि कुमारनंदिनः । श्रवणबेलगुलशिलालेखेष्वपि न क्वापि श्रीकुंदकुंदगुरोरुल्लेखो दृष्टिपथमवातरत् किंतु महीपतिचंद्रगुप्तवर्णनानंतरं कुंदकुंदभगवानेव समुपवर्णित । प्रारब्धा च गुरुपरंपरा श्रीमत्कुंदकुंदत एव तद्वर्णनायां । नंदिसंघस्य प्रधानाराधीश श्रीकुंदकुंद एवाजनि, इति न केनापि विज्ञेन क आसीत्कुंदकुंदभगवद्गुरुः । स्वरचितग्रंथेष्वपि क्वापि नोल्लेखयांचक्रे कुंदकुंदभगवानात्मनीनं गुरुमिति ।

## शिष्यपरंपरा

श्रीमद्भगवत्कुंदकुंदाचार्य समजनिष्ट नंदिसंघस्य नंदिगणस्य वा प्राथमिकाचार्य । समस्ति कश्चित् ११११ तम-ए. डी. शताब्दिसन्निकृष्ट शिलालेख । तत्र व्यलेखि विस्तरतया समुल्लेख श्रीकुंदकुंदशिष्यपरंपराया । स्थानाभावादप्रकाश्यतोऽपि वय त. समुद्धावयाम कियत चित्तत्कार—

श्रीमपद्मनंदिनोऽपराभिधेय कुंदकुंद आसीत् । स च सत्संयम्य चारणर्द्धि प्रवरामलचारणमाहात्म्यात् । समजनि च तस्योमास्वाति शिष्य । गृध्रपिच्छाचार्यनाम्नापि स समुपालेभे भुवि विश्रुतिं । नाभूच्च पद्मनद्यन्वये गृध्रपिच्छसम कश्चिदन्य प्रज्ञाविद्वान् । तस्य च नैकनरपतिपरिपूजितचरण शोभनातिसन् बलाकपिच्छः शिष्य । बलाकपिच्छस्यांतेवासी च तर्कव्याकरणसाहित्यादिनिगमागमजलनिधिसमाहितपारो यतिश्च समजनि गुणनंदिविद्वान् । गुणनंदिनश्च त्रिशतशिष्या समभूवन् तेष्वपि कठिनतममपि विषयं सुगमतया व्याख्यातृत्वात्, प्रमाणतत्त्वानवेक्षृत्वात् सिद्धांतशास्त्रस्य वेत्तृत्वाच्च समभूमिविख्यातेतरासिशिरोमणि श्रीदेवेंद्रविद्वान् । देवेंद्राचार्यांतेवासी सिद्धांतचक्रवर्ती वा कामिनीवल्लभश्च बभूव कलधौतनंदी । (कनकनंदी (? ।) तस्य च पुत्रो मदनशंकरो महेंद्रकीर्तिर्वा समजनि । तच्छिष्यश्च श्रीवीरनंदी स च कविचूडामणि, गमक महावादी, वाग्मी च जात । इत्यादि ।

तृतीयनगरारचितशिलालेखेऽपि पद्मनंदि—उमास्वाति—बलाकपिच्छेत्याचार्यत्रयवर्णनानंतरं संस्तुता समंतभद्र—पूज्यपाद—अकलंकप्रभृतय सूरय । किंतु न क्वापि समुट्टंकितं समंतभद्र किल बलाकपिच्छस्य शिष्य आसीदिति । परं तद्वंशपरंपरायामभूदिति लेख । ४०तमे शिलालेखेऽपि यत्र बलाकपिच्छवर्णनानंतरं समंतभद्रपूज्यपादौ स्तुयेतेस्म तत्र समंतभद्र —बलाकपिच्छपरंपरायामेव समजनि न तु तच्छिष्य इति समाभिरभानि सुस्पष्टतया ।

परंतु लेखद्वितयमपीदं न नंदिसंघपट्टावलीसमतामवगाहते । नंदिसंघपट्टावल्यास्तु परंपरेयं—उमास्वाति, लोहाचार्य, यश कीर्ति, यशोनंदी, देवनंदी, (पूज्यपाद) गुणनंदीत्यादय । तैमान्यत्र पट्टभेदात्कृतेदर भेद । पट्टावलीरचयितारो वा प्रमाणाभावेऽप्यनुमानतस्तत्क्रमं लिलिखुरिति ? ।

—

१

## स्थानं ।

श्रुतावतारलेखतः समनुभूयते-समभूद्भगवान् कुंदकुंदः संभाव्यमानकर्णाटकप्रांतांतर्गतकोण्डकुण्डपुरे । यदा भद्रबाहुस्वामिसमानकालीन समजनि गरीयान्दुष्कालस्तदा, अगाद्दिशाख्यसंघो मुनीनां मुनिवरभद्रबाहुना समं कर्णाटकदेशं । समजनि च तदात्वे चारित्रशैथिल्यादत्र श्वेतांबरदिगंबरविभागः । विनिर्धार्यते संजायमाने किल भेदद्वये दिगंबराचार्यैर्दक्षिणकर्णाटकदेशः श्वेतांबरैश्च गुर्जरः, उत्तरभारतश्च निचक्रे स्वीय प्रधानस्थलं । कियत्कालभागेनास्माद्भेदात्समजनि श्रीकुंदकुंदभगवान् । अतः कर्णाटकप्रांत एव नियतमेतन्निवासस्थलं विभाव्यते । श्रीमत्कुंदकुंदशिष्या गुणनंदिदेवेंद्रादयोऽपि कर्णाटकप्रांत एव समभूवन्नतोऽपि भगवान् कुंदकुंदः कर्णाटकप्रांतस्थ एव विनिश्चीयते

पागलगोत्रोद्भवश्रीमत्पंडिततात्यानेमिनाथमहोदयैर्विलिखिता काचित्कुंदकुंदाचार्यविषयिणी कथा ज्ञानप्रबोधाभिधमाषाग्रंथाधारतः । तत्र मराठीचके श्रीमत्पागलमहोदयैः कुंदकुंदभगवान् मालवप्रांतांतर्गतवारापुरवास्तव्यः परन्तु केवलतत्कथातिरिक्तं वारापुरनिवासित्वे न नियामकं किमप्यन्यत्र गमकं ।

## समयविचारः।

समवगम्यते किलेदं नंदिसंघपट्टावलीतो यत् ४९ तमाया वैक्रमशताब्द्यां न्यवात्सीद्भगवान् कुंदकुंदो नंदिसंघपट्टे । स च तदात्व आसीदेकादशवर्षीयः । एवं च मासदशकपूर्वैकपंचाशद्वर्षाणि संघं संशास्य [1] तत्संवत्सरसन्निकृष्टे समन्वभूद्व्ययथसुखं । परन्तु विचारनिकषप्रमाणे विनिर्णीतः किलायं समयकलापस्तः सर्वथा कल्पित एव प्रतिभाति ।

जिनवरमहावीरनिर्वाणप्राप्त्यानन्तरं समजनिष्ट ६८३ वर्षपर्यंतमंगज्ञानप्रवृत्तिरत्र । अनंतरं च सा तिरोबभूव इति श्रुतावतारसंधाभ्यात्त समवगम्यते । इत्थं तद्व्यवस्था—

| | | |
|---|---|---|
| १ | इंद्रभूतिगणधरः (केवली) | १२ वर्षाणि |
| २ | सुधर्माचार्य | १२ वर्षाणि |
| ३ | जम्बूस्वामी | ३८ वर्षाणि |
| ४ | विष्णुप्रभृतिपंचश्रुतकेवलिनः | १०० वर्षाणि |
| ५ | विशाखदत्तप्रभृतय एकादशांगदशपूर्वपाठिनः | १८३ वर्षाणि |
| | नक्षत्रादय एकादशांगपाठिनः | २२० वर्षाणि |
| | सुभद्रादय आचारांगपाठिन | ११८ वर्षाणि |
| | | ६८३ |

महावीरभगवन्निर्वाणानंतरं ६८३ वर्षपर्यंतं जागर्तिस्मांगप्रवृत्तिरिति हरिवंशपुराणप्रशस्तावपि लिखितमास्ते । यथा—

> अथ क्रमात्केवलिनो जिनात्परे द्विषष्टिवर्षांतरभाविनोऽभवन् ।
> ततः परे पंच समस्तपूर्विणस्तपोधना वर्षशतांतरे गताः ॥ १ ॥
> त्र्यशीतिके वर्षशते तु रूपयुक् दशैव गीता दशपूर्विणः शते ।

1 त्रिलोकसारादिग्रंथप्रामाण्यात्सुनिश्चितमेतत् ४७० तमवैक्रमसंवत्सरपूर्वं मुमुचे भगवान्महावीरः । अस्मल्लिखितदिङ्समयः श्वेतांबरमतेनापि लिखित ।

2 भावर्मलेखकमतात्—लोहाचार्यानंतरभाविनः—अर्हद्बलि—माघनंदि—भूतबलि—पुष्पदंताचार्या अंगज्ञानेन समभूवन् किंतु प्रमाणाभावान्न प्रमाणं ।

3 गुणधरधरसेनान्वयगुर्वोः पूर्वापरक्रमोऽस्माभिः ।
न ज्ञायते तदन्वयकथकागममुनिजनाभावात् ॥ १५१ ॥

श्रुतावतार ।

द्वये च विंशैगमृतोऽपि पंच ते शते च साष्टादशके चतुर्मुनि ॥ २ ॥

आदिपुराणस्य द्वितीयपर्वणि १३९, १५० तमाभ्यां पद्याभ्यां भगवज्जिनसेनाचार्यैरपि मतमिदं पुपुषे। प्रपन्नयमपीदं पराचीनतमदत्तप्रमाणतम च ततो वीरनिर्वाणानंतरं ६८३ संवत्सरपर्यंत—अर्थात् २१३ वैक्रमसंवत्सरपर्यंतमर्वाक्तमतमात्तोऽगज्ञानप्रवृत्तिस्तत्र न क्वापि संशीतिः।

श्रुतावतारावलंबनतः वीरनिर्वाण ६८३-वर्षानंतरं श्रीदत्त शिवदत्त अर्हद्दत्ता अंगपूर्वाणां कियतां चिदंशानां समभूवन् ज्ञातार। तदनंतरं समजनि पुण्ड्रवर्धनपत्तने श्रीमदर्हद्बलिः—अंगपूर्वांशदेशज्ञ। ततश्चांगपूर्वांशदेशज्ञो बभूव माघनंदिमुनि—समाययौ च स स्वर्गं समाधिद्वारेण। तत्पश्चात् कर्मप्राभृतबोधविचक्षणो धरसेनाचार्यः समुत्पेदे। स च भूतबलिपुष्पदंतावध्यापयामास। शिष्यद्वयं चेदं कर्मप्राभृतस्य षट्खंडशास्त्राणि विरचयामास।

गणधर यतिवृषभ उच्चारणाचार्या इति त्रयः सूरयोऽपरेऽपि समुपेदिरे। तैश्च क्रमशः कषायप्राभृतगाथा, चूर्णिका, वृत्तिश्च विलिखिता।

समाप च पद्मनंदिमुनिः कर्मकषायप्राभृतसिद्धांतद्वयं गुरुपरिपाटीतः कोण्डकुन्दपुरे। अर्थात् इन्द्रनंदिसूरिरचितश्रुतावतारावलंबनेन प्रादुरभूद्भगवान् कुंदकुंद भूतबलि पुष्पदंत-उच्चारणाचार्यसमनंतरं। परं ना निर्णीयते कदा? तथापि निम्नलिखितपद्यात् सुनिश्चितं समनुमीयते प्रतिपादिताचार्यमरणानंतरं कियद्वर्षाभ्यंतरं प्रत्यपादि भगवान् कुंदकुंद। अन्यथा गुरुपरिपाटीतः सिद्धांतद्वितयमवाप कुंदकुंदप्रभुरिति न प्रतिपादयितुं पार्यते। तच्च पद्यमिदं—

एवं द्विविधो द्रव्यभावपुस्तकगत' समागच्छन् ।
गुरुपरिपाट्या ज्ञात सिद्धांत कुंडकुंदपुरे ॥ १६० ॥
श्रीपद्मनंदिनेत्यादि

गरीयानयं परितापः श्रुतावताररचयिता श्रीमदिंद्रनंदी नाज्ञीगणत् गुणधरधरसेनाचार्ययोः पूर्वापरक्रमं यदि स व्यजिज्ञपत् तयो गुरुपरिपाटी प्रत्यपादि तदा सुलभतया सुनिश्चितं श्रीमत्कुंदकुंदसमयं। तथा तत्प्रतिपादनानुकंपया नियतमिदं विज्ञायते अंगपूर्वैकदेशयोरवबोधो देशकालदोषतो मंदतमायमान प्रतिपद्यते स्म। क्रमेण चानेन गुणधरधरसेनाचार्यौ प्रादुरभूतां सर्वतः पश्चात्। यौ च—अग्रायणीपूर्वांतर्गतपंचमवस्तुनश्चतुर्थप्राभृतस्य, ज्ञानप्रवादपूर्वांतर्गतदशमवस्तुनस्तृतीयकषायप्राभृतस्य च ज्ञातारावास्तां।

अथमाशय—यदेमौ द्वौ विद्वांसौ समजनिषातां यदा समभूत् चरमांगज्ञानी लोहाचार्यः। तदनंतरं समपसत च आरातीयचतुर्मुनय। ततश्च समुपेदाते—अर्हद्बलिमाघनंदिनाविति।

श्रीलोहाचार्यस्य मरणकाल २१३ तमवैक्रमशताब्दिसंनिकृष्ट। यदि चरमांगज्ञानिवत् विनयधरादिचतुरारातीयमुनयोऽपि केवलमष्टादशवर्षाणि प्रापिता एव समभिमन्येरन्। तदनंतरं अर्हद्बलिमाघनंदिनावपि दशवर्षमध्यां द्वादशवर्षमध्यां वा सगण्येरन्, तत्पश्चात् धरसेन भूतबलि पुष्पदंत गुणधर-यतिवृषभ-उच्चारणाचार्यादीनां सर्वे गुरुपरिपाटीतत्तद्भयानां भगवत्कुंदकुंदपर्यंतसमानयने पंचाशद्वर्षाण्येव वा स्वीक्रियेरन् तदा भवति निश्चितं श्रीकुंदकुंदस्वामिसमय—वैक्रमतृतीयशताब्देश्चरमपादसान्निध्ये।

समनुगच्छति तावदिदं सकला जना समुपपेदे भगवान् कुंदकुंदो नंदिसंघे सातिशयो विश्रुतश्च विद्वान्। परार्धीनजैनग्रंथा अप्यत्र प्रमाण। अर्थात् समुल्लिखितं समवतिष्ठत तेषु, नंदसंघस्थापना समभूत्तत्पुरस्तात्। संघस्थापकश्च समजनि श्रीमदर्हद्बलि। नंदिसंघगुर्वावलीतश्च समवाबोधीद, यत्कुंदकुंदभगवान् तृतीयाचार्यो नंदिसंघस्य। अर्थात् समजनिषातां तत्पुरस्तात् माघनंदिजिनचंद्रौ। ततोऽर्हद्बलिमाघनंदिसमनंतरं सुलघीमध्ययानस्यक एव भगवत्कुंदकुंदस्थितिसमय स च संपतिष्यति तृतीयशताब्देरुत्तरार्धकाले।

एकदा भगवत्कुंदकुंददेवै सह समजनि गरीयान् विवादो रैवतिकमहीधरे श्वेतांबराचार्याणां। कृता च तदा स्वामिभि पाषाणनिर्मिता सरस्वतीमूर्तिर्वाचालितेति जागर्ति विश्रुतकथा। तत्र प्रमाणं—

पद्मनंदिगुरुर्जातो बलात्कारगणाग्रणी
पाषाणघटिता येन वादिता श्रीसरस्वती ।

गुर्वावली —

कुंदकुंदगणी येनोर्ज्जयंतगिरिमस्तके
सोऽवताद्वादिता ब्राह्मी पाषाणघटिता कलौ ।

शुभचंद्रकृतपांडवपुराणः

प्रमाणेनामुना विनिश्चीयते भगवत्कुंदकुंदस्य पुरस्तादपि जैनधर्मो दिगम्बरश्वेताम्बरेतिभागद्वये विभक्त आसीत् । कुंदकुंदविरचितषट्पाहुडमध्येऽपि श्वेताम्बरसम्प्रदायास्तित्वमाभासते । यथा—

णवि सिज्झइ वच्छधरो जिणसासणे जइ वि होइ तित्थयरो ।
णग्गो विमोक्खमग्गो सेसा उम्मग्गया सव्वे ॥ १ ॥
जइ दंसणेण सुद्धा उत्तामग्गेण सावि संजुत्ता ।
घोरं चरिय चरित्तं इच्छीसु ण पव्विया भणिया ॥ २ ॥

सूत्रपाहुडमध्यः

निर्णयमिदमत्र दिगम्बरसम्प्रदाये कदा श्वेताम्बरसम्प्रदायसमुत्पत्तिरभिमता । देवसेनसूरिभि स्वीय-**दर्शनसारग्रंथे तु** गाथेयं प्रकटिता—

एक्कसये छत्तीसे विक्कमरायस्स मरणपत्तस्स ।
सोरट्ठे वलहीये उप्पण्णो सेवडो संघो ॥ १ ॥

दर्शनसारे यस्य विक्रमस्य व्यक्तोक्ति संवत्सरो मन्ये दनुमानतः स शकविक्रम शालिवाहनो वा । जैन-ग्रंथेषु समस्तीय शालिवाहनशकसंवत्सरयोर्विक्रमसंवत्सरलेखनपरिपाटी । ततो १३६ तमसंवत्सरो यदि शकीय-स्तदा तस्मिन् शकसंवत्सरे, १३५ शतोत्तरपंचत्रिंशद्वर्षसम्मेलनतः २७१ तम वैक्रमसंवत्सरे निष्पन्ने नियत श्वेताम्बरसमुत्पत्तिस्तत्सान्निध्ये समजनीति निर्विवादनिश्चय ।एवं समनंतरं च श्वेताम्बरसमुत्पत्तेः प्रतिपादित-श्रुतावतारप्रामाण्यास्तित्वस्यदा ततया भगवत्कुंदकुंदाम्नस्तृतीयशताब्देश्चरमभागे । २१३ तमवैक्रमसंव-त्सरात्पूर्वं तु साधयितुमेव नार्हति भगवत्कुंदकुंदोत्पत्तिसमय ।

श्रीमद्भगवत्कुंदकुंदसमयविषये विद्वद्वरश्रीमत्पंडितके॰ बी॰ पाठकमहोदयाना मतमिद—

कोण्डकोन्दान्वयोदारो गणोऽभूद्भुवनस्तुत तदैतद्विषयविख्यात (?) शाल्मलीग्राममावसन् ॥१॥
आसीदतोरणाचार्यस्तप फलपरिग्रह । तत्रोपशमसंभूतभावनापास्तकल्मष ॥ २ ॥
पंडित पुष्पनंदीति बभूव भुवि विश्रुत । अंतेवासी मुनेस्तस्य सकलश्चन्द्रमा इव ॥ ३ ॥
प्रतिदिवसभवद्वृद्धिर्निरस्तदोषो व्यपेतहृदयमल ।
परिभूतचंद्रबिम्बस्तच्छिष्योऽभूत्प्रभाचंद्र ॥४॥

अमूनि पद्यानि राष्ट्रकूटवंशतृतीयगोविंदमहाराजसमकालीन ७२४ तमशकसंवत्सरस्य ताम्रपट्टे विलिखितानि प्राप्तानि । तस्यैव गोविंदमहाराजस्य समकालीन ७१९ तमशकसंवत्सरस्यापरेऽपि कश्चित्ता म्रपट्ट समासन्न च निम्नलिखितानि पद्यानि—

आसीदतोरणाचार्य कोण्डकुंदान्वयोद्भव । स चैतद्विषये श्रीमान् शाल्मलीग्राममाश्रित. ॥१॥

---

१ नापि सिध्यति वस्त्रधरो जिनशासने यद्यपि भवति तीर्थंकर ।
नग्नो विमोक्षमार्गो शेषा उन्मार्गा सर्वे ॥ १ ॥
यदि दर्शनेन शुद्धा उक्तमार्गेण सापि संयुक्ता ।
घोर चरति चरित्र स्त्रीषु न ......भणिता ॥ २ ॥
एकशते षट्त्रिंशति विक्रमस्य मरण प्राप्तस्य ।
सौराष्ट्रे वलभीके—उत्पन्न श्वेताम्बरसंघ ॥१॥

निराकृततमोऽरातिः स्थापयन् सत्पथे जनान् । स्वतेजोद्योतितक्षोणिश्चंडार्चिरिव यो बभौ ॥२॥
तस्याभूत्पुष्पनंदी तु शिष्यो विद्वान् गणाग्रणीः । तच्छिष्यश्च प्रभाचंद्रस्तस्येयं वसतिः कृता ॥३॥

अमीभिः पद्यैर्निमतं विज्ञायते कुंदकुंदान्वयि (च) तोरणाचार्यस्य शिष्यः पुष्पनंदी तच्छिष्यश्च प्रभाचंद्रो यदि, ७१९ तमे शकसांवत्सरिकस्तदा तोरणाचार्यः ६०० तमायां शकशताब्दौ सिद्ध्यति । अनया दिशा तेषां कुंदकुंदान्वयित्वे भगवत्कुंदकुंदसमयस्तेषां १५० शतोत्तरपंचाशद्वर्षपूर्वं-'अर्थात् ४५० तमे संवत्सरे' सिद्ध्यति ।

५०० तमे शकसंवत्सरे शास्ति स्म कश्चित् चालुक्यचक्रवर्ती कीर्तिवर्ममहाराजः बादामीनगरे वातापीपुरे वा स च विनाशयामास पराचीनं कदंबवंशं । अर्थात् ५०० तमशकसंवत्सरात्पंचाशद्वर्षपूर्वे (४५० तमशकसंवत्सरसांनिध्ये) प्राचीनकदंबवंशीयः श्रीशिवमृगेशवर्ममहाराजो विद्यते स्म राज्यमिति निश्चितिः । श्रीशिवकुमारमहाराजप्रतिबोधनार्थं विलिलेख भगवान् कुंदकुंदः स्वीयं ग्रंथमिति समाविर्भावितं च पंचास्तिकायस्य क्रमशः कर्णाटकसंस्कृतटीकाकारैः श्रीबालचंद्रजयसेनाचार्यैः । ततो युक्त्यानयापि भगवत्कुंदकुंदसमयः तस्य शिवमृगेशवर्मसमानकालीनत्वात् ४५० तमशकसंवत्सर एव सिद्ध्यति स्वीकारे चास्मिन् क्षतिरपि नास्ति कापीति ।

## ग्रंथरचना।

भगवत्कुंदकुंदस्वामिभिर्विरचिताः समस्तग्रंथाः प्राकृतभाषायामेवोपलभ्यंते । संस्कृतभाषायामपि स्वामिभिर्निर्मिताः संति ग्रंथा इत्यत्र न किमपि प्रमाणं । तदात्वे जनता संस्कृतभाषापेक्षया कठिनतममपि विषयं प्राकृतभाषायामवबोद्धुं समर्थासीत् । अतः प्रकटयति स्वामिनः प्राकृतप्रेमेदं नासीदेषां स्वीयपाण्डित्यप्रकटनाय लक्ष्यं किंतु सर्वजनहितसमीहापूर्णं मनः । इमानि तद्रचितग्रंथरत्नानि—

१ समयसारप्राभृतं २ पंचास्तिकायप्राभृतं ३ प्रवचनसारप्राभृतं ४ षट्प्राभृतं–(दर्शनपाहुड–सुत्तपाहुड–चारित्तपाहुड–बोधपाहुड–भावपाहुड–मोक्खपाहुडेतिषट्पाहुडग्रंथाः) ५ रयणसारः बारसाणुवेक्खा (द्वादशानुप्रेक्षा) नियमसारश्चेति । तत्राद्यं ग्रंथषट्कं तु मुद्रितं । सप्तमो नियमसारः संमुद्र्यते संस्कृतटीकाकारैः स्वोपज्ञभाषाटीकादिभूषितश्च श्रीयुतब्रह्मचारिशीतलप्रसादैः ।

षट्खंडसिद्धांतस्य प्राथमिकत्रिखंडस्य टीकापि महती भगवत्कुंदकुंदस्वामिभिर्विरचिता । तत्परिमाणं च द्वादशश्लोकसहस्रं । समुल्लेखः खल्वेतस्याः श्रुतावतारे । पर न समस्ता समुपलभ्यते सांप्रतं । व्यज्ञासीदं भगवत्कुंदकुंदैश्चतुरशीतिशास्त्राणि विरचितानि कियतांचित्तु समुल्लेख उपरिष्टात्कृतः । कियतां च शेषाणामिमानि नामानि समुपलभ्यानि–

जोणीसार–क्रियासार–आराहणासार–लब्धिसार–क्षपणासार–बंधसार–तत्त्वसार–अंगसार–द्रव्यसार–क्रमपाहुड–पयपाहुड–विद्यापाहुड–उद्योतपाहुड–शब्दपाहुड–सिद्धांतपाहुड–लोयपाहुड–करणपाहुड–समवायपाहुड–नयपाहुड–प्रकृतिपाहुड–चूर्णीपाहुड–पंचवर्गपाहुड–कर्मविपाकपाहुड–वस्तुपाहुड–बुद्धिपाहुड–पयद्धपाहुड–उत्पादपाहुड–दिव्यपाहुड–सिक्खापाहुड–जीवपाहुड–आचारपाहुड–स्थानपाहुड–प्रमाणपाहुड–आलापपाहुड–चूलीपाहुड–षट्दर्शनपाहुड–णोकम्मपाहुड–संठाणपाहुड–नितायपाहुड–एयंतपाहुड–विहयपाहुड–सालमीपाहुडेतिद्विचत्वारिंशद्ग्रंथाः ।

कुंदकुंदश्रावकाचारग्रंथस्य भगवत्कुंदकुंद एव रचयितेति पूर्वमासीत्सर्वासांदिः । किंतु परीक्ष्यमाणे तस्मिन् व्यज्ञासीदं न तत्कर्त्तारस्ते परं स्वामिभिन्नात्सिद्धयर्थं केन चिद्धूर्तेन श्वेतांबरसमाजस्य विवेकविलासनामकग्रंथस्य पराहृत्य कानिचित्पद्यानि तत्रागतो निश्चितिः ।

भगवत्कुंदकुंदस्य सांप्रतं याः कृतयो दृष्टिपथमवतरंति ताः सरलतमाः सुरसाश्च । ततो विनिर्गमयते महामननरतस्य, भावपूर्णाकृतिः मुख्यतया सर्वजनबोधकरा च भवेदिति प्रतिज्ञामयं लक्ष्यमासीत् ।

१ दिगंबरश्वेतांबरवादी एवं द्वितीयो इत्थोल्लदि पद्यद्वयं ।

भगवत्तारचितकृतिषु समयसार–पञ्चास्तिकाय–प्रवचनसारेति त्रिकृतय सर्वप्रधाना. । इति त्रिकमिद च दिगम्बरसमाजे प्राभृतत्रयनाम्ना च विश्रुतं । अध्यात्मवेदान्तविषयः किल जैनधर्मस्य प्रथमत्रय एवास्मिन् समञ्जसतया समुपवर्णितः । न काप्यत्युक्तिः स्यात् यदि प्रस्थत्रयमिद जैनधर्मस्य जीवत्वेन प्राणत्वेन वाभ्युपगतं स्यात् । निश्चयकिलापमास्माक यावन्न कश्चिदध्यैष्यत ग्रंथत्रयमिदं न प्रत्यपत्स्यत स तावज्जैनधर्मज्ञता ततो जैनधर्मज्ञातृत्वमानिभि. तस्ममहिमानेश्च नियतमभ्यसनीयमेतद्ग्रंथरत्नत्रय ।

## टीकाकारौ ।

### श्रीमदमृतचन्द्रसूरिः—

मात्र सर्वेऽपि समजनि श्रीमदमृतचन्द्रो ग्रंथकारटीकाकारश्च । परन्तु पावनात्माय महात्मा कदा ! क ! समयचात्मनीनवैदुष्येण भारतभूमिं विभूषयामासेति निर्णयाय न वर्तनरीति सर्वमपि ऽस्माकं किमपि सुदृढ गमकं । केचिदामनन्ति विद्वांसोऽस्य महात्मनो दशमशताब्दिकाल पर तत्र पुष्कलप्रमाणाभावान् न स हि प्रमाणतामास्कंदति । महात्मायं स्वकरकलितग्रंथेषु टीकासु वा स्वनामातिरिक्तमात्मनीनगुर्वादिनामापि न विलिलेख यतो भवेत् सुगमता तस्समयादिविनिर्णयाय । ततो दुरधिगम्य एवास्य विदुषः समयादिविनिर्णयः । पुरुषार्थसिद्ध्युपाय तत्त्वार्थसार, इति ग्रंथद्वय स्वातन्त्र्येण समिर्मितमनास्तरति दृष्टिपथ साम्प्रतं । भगवत्कुंदकुंदस्वामिविरचितसमयसार–पंचास्तिकायसार–प्रवचनसारेतिनाटकत्रयस्य टीकाश्च तिस्र. । ताश्च टीका स्वस्वरूपेण भाष्यतामनुकुर्वन्ति । नात्र संदेहः महात्माय तात्त्विकतात्पर्यनिर्णायकत्वचनरचनातः समप्रबोधयति यत्सप्रमाणादिपदमध्यात्मटीकाकृत्सु स. ।

विचित्रे जैनसमाजे कश्चिदपूर्वं किलपूर्णं पद्याध्यायी ग्रंथः । योऽचिरकालतश्च प्रकाशपदवीमुपनीतः यस्य चाध्ययनाध्यापनप्रसारः समजनि न्यायवाचस्पति पंडितप्रवरश्रीगोपालदासपावनजीवनभूलक **जैनसिद्धांतमहाविद्यालयद्वारैनातः** । सोऽप्यस्यैव महात्मनः कृतिरिति विनिर्धारितस्तद्रचनाशैलीविलोकमान् विषयप्रतिपादनशैलीदर्शनाच्च । भवितव्य चानयाऽप्रतिभामृतचन्द्रसूरिकलेनैव विदुषा तथाविधगभीरकृतिनिर्माणमिति ।

### जयसेनाचार्यः

नाम्नानेन किल, समजनिषत नैकविद्वांसो मुनि, तत्र भगवज्जिनसेनाचार्यैरादिपुराणे यः संस्तुतः स प्रथमः । हरिवंशपुराणप्रशस्तौ च यः सिद्धान्तशास्त्रज्ञत्वेनोपन्यस्त. स द्वितीय तृतीयश्च परिचितसर्णि **दुलीचंद**प्रतिष्ठापाठप्रणेता । गवेषणाया सत्याभन्येऽपि मिलिष्यति । ततो न निश्चेतु पार्यते निश्शंक कतमो जिनसेनाचार्यस्तात्पर्यवृत्तिप्रणेता । प्रवचनसारपंचास्तिकायसारप्रशस्ती परिचाययति महात्मायमित्थ—

अज्ञानतमसा लिप्तो मार्गो रत्नत्रयात्मकः । तत्प्रकाशसमर्थाय नमोऽस्तु कुमुदेंदवे ॥ १ ॥

सूरि. **श्रीवीरसेनाख्यो** मूलसंघेऽपि सत्तपा । नैर्ग्रन्थ्यपदवी भेजे जातरूपधरोऽपि यः ॥ २ ॥

ततः **श्रीसोमसेनोऽभूत्** गुणी गुणगणाश्रय । तद्विनेयोऽस्ति यस्तस्मै जयसेनतपोभृते (!) ॥३॥

इतिपद्यत्रयादिज्ञायते वीरसेनशिष्यः सोमसेनस्तच्छिष्यो जयसेनः स च मुनिर्मूलसंघीयः । अपरश्चैको जयसेन स्वनिर्मितवसुनिंदुप्रतिष्ठापाठे परिचाययतीत्थ—

कुंदकुंदाग्रशिष्येण जयसेनेन निर्मितः । पाठोऽयं सुधियां सम्यक् कर्तव्यायास्तु योगतः ॥१॥

श्रीदाक्षिणे युकुणनामदेशे सह्याद्रिणा संगतसीम्नि पूते । श्रीरत्नभूपोपरिदीर्घचैत्ये लालाटराज्ञा विधिनार्जित यत् ॥२॥

तत्कार्यमुद्दिश्य गुरोरनुज्ञामादाय कोल्हापुरवासिहर्म्यात् दिनद्वये स लिलिखे मतानामपूर्वमेव श्रुतसन्निधौ ॥३॥

वसुबिंदुरिति प्राहुस्तदादि गुरवो यतः । जयसेनापराख्यो नमोऽस्तु हितैषिणां ॥४॥

प्रथमश्लोकस्य "कुंदकुंदाग्रशिष्येणेति विशेषणेनानुमीयते यत तात्पर्यवृत्तिप्रणेनैव जयसेनेन माघ्यं । परं कदा क समभूदय मुनिराडिति विनिश्चित्ये नास्ति किमपि निष्कलङ्कं गमकं । मुनिनानेन स्वनिर्मितताऽपरवृत्तौ किम मुचितमेषु श्रीमदमृतचन्द्रसूरिटीका वर्तितः समनुसृता शब्दैः परावृत्त्य तात्पर्यमपि यत्र कुत्रचिदमृतचन्द्रसूरिनिर्दिष्टमेव समुद्दिष्टं तत समजन्यय महात्मा श्रीमदमृतचन्द्रसूरितःपश्चादिति नियत विभाव्यते ।

निवेदयिता—मनोहरलालः

# श्रीसमयप्राभृतस्य शुद्ध्यशुद्धिपत्रम् ।

| अशुद्धिः | शुद्धिः | पृ. | पंक्तिः |
|---|---|---|---|
| अचला | अमला | १ | ३ |
| माला | प्रसाद | १ | ३ |
| समयप्राभृतमिदं | समयप्राभृतमहो | १ | ४ |
| सबधमिधेयेति | संबधाभिधेयेति | २ | ६ |
| णाणाद्विदेति | णाणाद्विदेति | ,, | २६ |
| णारकेति | णरनारकेति | ,, | २७ |
| वर्तत | वर्तते | ३ | १३ |
| अनुगृह्यतो | अनुगृह्यतो | ,, | २१ |
| अथ एवैतस्य | अत एवैतस्य | ४ | २१ |
| स्खलित | स्खलितं | ,, | २५ |
| चारित्रत्वेन | चारित्रत्वेन | ५ | १७ |
| गतं । | गत ॥ १२ ॥ | ७ | ११ |
| शेषकाले ॥१२॥ | शेषकाले । | ,, | १२ |
| अनयोः | अनयोः | ,, | १६ |
| फार्तस्वर्णेति | फार्तस्वरेति | ८ | १२ |
| शुभोपयोग | शुभोपयोगे | ,, | १६ |
| हेयोपादेयतत्व | हेयोपादेयतत्वं | ९ | ३ |
| परमादितत्वेति | परमात्मादितत्वेति | १० | ४ |
| अभवरपृष्टं | अबभरपृष्टं | ,, | २२ |
| पर्यायमुख्यतया | पर्यायं मुख्यतया | ११ | ७ |
| विधाणीहि | विधाणाहि | ,, | १८ |
| भावार्थ | भावार्थः | ,, | २७ |
| अपदेश शब्दाः | अपदेशः शब्दाः | १२ | १६ |
| स्वरूपमेर | स्वरूप एव | ,, | २० |
| सम्याज्ञानादिके | सम्यग्ज्ञानादिक | ,, | २१ |
| अमुद्राना | अमुद्रानी | १३ | १ |
| व्यवच्छेदेन | व्यवच्छेदेन | ,, | ६ |
| वस्त्वंतरं | वस्त्वंतरं | ,, | २९ |
| सो एव | सोचेव | १४ | १९ |
| पुरुषः | पुरुषः | १४ | २९ |
| अहमेनदेवद- हमेतरस्पास्मि | अहमेतदेवदह- महमेतस्यास्मि | १५ | २२ |
| पूर्वमेतदेतत् | पूर्वमेतत् | ,, | २४ |
| अहमिदंच | अहमिदं चापि | ,, | २४ |
| द्रव्यं | दव्वं | १८ | ४ |
| देहाद्भिन्नं | देहाद्भिन्नं | ,, | ५ |
| सव्वहुणाणदिद्वो | सव्वहुणाणदिट्ठो | ,, | ७ |
| ववहारणयो | ववहारणओ | १९ | १५ |
| तन्निश्चयेन | तन्निश्चये | २० | ९ |
| निश्चयस्तुतिप- रिहारं | निश्चयस्तुति- रिति परिहारं | ,, | २९ |
| सुखादिमत्तामावात | सुखादिमत्त्वाभावात् | ,, | ३३ |
| तृतीता | तृतीया | २१ | १७ |
| गाथाचतुष्टये निश्चये | गाथाचतुष्टये | ,, | १८ |
| प्रतिबुद्धः । | प्रतिबुद्धः | २३ | २ |
| प्रतिपत्या | प्रतिपत्त्या | ,, | ३० |
| शुद्धात्मस्वरूपस्य | शुद्धात्मस्वरूपस्य | २४ | १२ |
| इति | इति । | ,, | १४ |
| क्षोभेति | क्षोभेति | ,, | १५ |
| दर्शनोपपयोग | दर्शनोपयोगः | ,, | २१ |
| किंचिव | किंचिवि | २५ | १८ |
| किंचिद्प्यन्यत् | किंचिदप्यन्यत् | ,, | २० |
| त्रिंशतगाथापर्यंतं | त्रिंशद्गाथापर्यंतं | २६ | १० |
| पार्श्वदान् | पार्श्वदान् | ,, | १७ |
| कर्मणोकर्मेति | कर्मनोकर्मेति | २७ | १० |
| कर्माणभागं | कर्मानुभागं | ,, | १२ |
| संयोगेणापि | संयोगेनापि | ,, | १६ |
| इतरे | इत्तरे | ,, | ११ |
| स्वामिकापाभ- तिरिक्तेति | स्वामिकापाति- रिक्तेति | २८ | १९ |
| नरपुराणवस्यादि | नरपुराणायस्यादि | ,, | २१ |
| चिरभ्यासस्य | चिरभ्यासस्य | ,, | २७ |
| विदंति | विंदंति | ,, | १६ |

| अशुद्धिः | शुद्धिः | पृ. | पंक्तिः |
|---|---|---|---|
| जिणं | जिणा | २९ | १ |
| यदध्यवसानदयः | यदध्यवसानाद्य | ,, | ११ |
| एव | एष | ३० | ६ |
| द्रवद्गुणेभ्य | द्रव्यगुणेभ्यः | ३१ | १६ |
| अज्झप्पद्वाण | अज्झप्पट्ठा | ३२ | ७ |
| संति | नसति | ३३ | ३ |
| असंणि | असण्णि | ,, | १४ |
| तत्रातरे | तत्रांतरे | ३४ | २४ |
| दृष्ट्वा | दृष्ट्वा | ३५ | २१ |
| भव | भवे | ३६ | २९ |
| मासाः | मासः | ३७ | ३५ |
| जीवोः | जीवाः | ३८ | १८ |
| जीवण | जावण | ४० | ३५ |
| वृत्तं | निवृत्तं | ४२ | १७ |
| सकलाभावात् | सकलत्वात् | ४३ | २३ |
| अज्ञानीसज्ञानी | अज्ञानिसज्ञानि | | |
| जीवेति | जीवेति | ४४ | १ |
| सज्ञानीजीवेति | सज्ञान | ४५ | २१ |
| ज्ञानी | ज्ञानि | ४५ | ३४ |
| छक्षते | छक्ष्यते | ४५ | ३५ |
| पर्याये | पर्यायैः | ४७ | ३५ |
| कर्तृकर्मभावे | कर्तृकर्मभाव | ४८ | ८ |
| जीवेति | जीवस्य | ४९ | ८ |
| परमप्पाणंकुव्वी | परमप्पाणमकुव्वी | ५० | १७ |
| [illegible] | तथ | ५० | ३५ |
| इच्छति | इच्छति | ५१ | ६ |
| परिणमत्कर्मणां | परिणमत्कर्मणा | | |
| करेदिधम्मदि | करेदि धम्मादि | ५६ | ३२ |
| नो इंद्रीति | नो इंद्रियेति | | |
| आत्मा | स्वेवं | ५९ | १९ |
| यादीति | यीदति | ६० | ३५ |
| करोत्यात्मनः | करोत्यात्मा | ६१ | १८ |
| संक्रमस्येवसोऽपि | सक्रमस्येव | ६१ | ३ |
| तनिरतर | तन्निरतरं | ६२ | २१ |
| तथा | यथा | ६८ | २८ |
| गाथाष्ट्कं | गाथाष्टकं | ७० | १६ |
| एवंशुद्धेति | एव शुद्धेति | ७० | १८ |
| सप्तपदार्थाना | सप्तपदार्थानां ! | ७० | २८ |
| ज्ञानीजीवस्वरूपं | ज्ञानिजीवस्वरूपं | ७१ | २ |
| सुइत्ता | सुइत्ता | ७१ | ११ |
| मच्चगं | मप्पगं | ७२ | १ |
| ज्ञानमयोऽज्ञानेति | ज्ञानमयाज्ञानेति, | ७२ | १३ |
| कर्मणः | भावस्य | ७२ | १६ |
| परिणतत्वाज्ञानिनः | परिणतत्वाज्ञानिन. | ७२ | ३१ |
| ज्ञानमयोः | ज्ञानमयो | ७२ | ३१ |
| मद्भुभयेति | मद्भुभावेति | ७३ | ३ |
| भावा | द्रव्याद् | ७३ | २३ |
| ज्ञानमयः | अज्ञानमय | ,, | २४ |
| समयसारे | समयसार | ८० | २७ |
| पुण्यामेनेको, तेन | पुण्यामेवैकातेन | ८६ | २८ |
| सर्वोऽपि | स सर्वोऽपि | ८८ | १९ |
| न | तदा न | ९१ | ३१ |
| विभावतो | विभाववतो | ९२ | २५ |
| दृष्ट्वा | दृष्ट्वा | ९९ | १२ |
| दिट्ठं | दिट्ठं | ९५ | १० |
| किं ब्रूयात | किं ब्रूयात् ? | ,, | २५ |
| प्रत्यया कारण | प्रत्ययाः कारणं | ९७ | २९ |
| उपयोग प्रयोग्य | उपयोगप्रायोग्य | १०१ | ३१ |
| बध्नति | बध्नति | १०३ | ७ |
| शुद्धो मोपादेयत्वे | शुद्धात्मोपादेयत्वे | १०४ | २२ |
| बध्नति | बध्नाति | १०५ | ३१ |
| बध्येत | बध्यते | १०७ | १७ |
| मज्झसहावा | मज्झमसहावा | ११० | २९ |
| मयवेदकभावो | वेयवेदकभावो | ११२ | १२ |
| अपरिग्रहा | अपरिग्गह | ११८ | ५ |
| छाहं | छेदं | १२० | १० |
| मूल | मूल । | १२० | ३६ |
| मूच | मूत्र | ,, | १६ |
| ज्ञाम्यपि | ज्ञान्यपि | १२१ | ३१ |
| सम्मादिट्ठी | सम्मादिट्ठी | १२४ | ५ |
| एवं | एव | १३० | १८ |
| आरंभ | आरंभ | १३१ | ७ |
| हवंदि | हवंति | १३१ | २९ |
| मया | मायां | १३७ | ३२ |
| हुविसदेति | हुविसदेति | १३८ | १ |

| अशुद्धिः | शुद्धिः | पृ. | पंक्ति. |
|---|---|---|---|
| पापाद्येन | पापोद्येन | १३९ | १२ |
| सक्रः | शक्रः | १४१ | २१ |
| आधाकमाधाः | आधाकर्माधाः | १४५ | २ |
| शाद्वेन | शब्देन | १४७ | २५ |
| वणिदो | वणिजदो | १४८ | २२ |
| निमित्तत्वापत्तो | निमित्तत्वापत्तौ | १४९ | २० |
| पुगालद्रव्यस्स | पुग्गलदव्वस्स | ,, | २६ |
| तात्पर्यवृत्तिः | तात्पर्यवृत्तिः | १५१ | ५ |
| सविकल्पमत्र | सविकल्पमत्र | १५६ | १० |
| सद्भावेऽपि | सद्भावेऽपि | ,, | १४ |
| पूर्वं . | पूर्वे | १५१ | २१ |
| किमयमेव | किमयमेव | १५२ | २२ |
| यथ | यथा | १५४ | १६ |
| सर्वेविशुद्ध | सर्वविशुद्धः | १५६ | १४ |
| नातिक्रामयति | नातिक्रामति | १५६ | १६ |
| भमति | भ्रमति | १५७ | १७ |
| मध्येऽह | मध्येह | ,, | १९ |
| फन | केन | ,, | २१ |
| समादौ | समाधौ | १५८ | १५ |
| परिहारण | परिहरणं | १५९ | ८ |
| स्वरूपेति | रूपेति | १५९ | २४ |
| नौर्ध्वमूर्ध्व | नोर्ध्वमूर्ध्वं | १६० | २३ |
| स्वीकीयगुणैः | स्वकीयगुणैः | १६१ | २५ |
| कम्मफलं | कम्मफलं | १६३ | १२ |
| भोक्तृत्वभाव | भोक्तृत्वभाव | १६५ | १० |
| सहाररूपेण | संहाररूपेण | १६६ | १४ |
| दोह्रं | दोह्नं | १६९ | १७ |
| विपयान्तरे ८ | विषयान्तरे | १७१ | ११ |
| तेषामाक्षेप कृतः | तासामाक्षेपः कृतः | १७१ | १२ |
| सांविदाख्य | संविदाख्य | १७६ | १९ |
| येन | येन् | १७६ | १९ |
| साख्योपदेश | सांख्योपदेश | ,, | १७ |
| रागादि | रागादी | १७९ | ११ |
| यथा | यथा | १८४ | १७ |
| तत्त्वार्थश्रद्धानोति | तत्त्वार्थश्रद्धानेति | १८५ | १७ |
| व्याख्यानमुख्यत्वेन | व्याख्यानमुख्यत्वेन | ,, | २८ |
| पर्यायषु | पर्यायेषु | १८६ | २ |
| सम्यशी | साम्यंशी | १८७ | ५ |
| अपात्र । | अपात्र | १९१ | १८ |
| शर्मधत्व | शर्मयत्वं | २०१ | १९ |
| पाद्सपोगेन | पद्सयोगेन | २०२ | ७ |
| जानाति | जानाति | २०४ | ५ |
| ससारणो | संसारिणो | | |
| सुष्ठो | सुष्ठु | २१९ | १९ |



# श्रीसमयप्राभृतस्य विषयानुक्रमणिका।

## श्रीवाजीवाधिकारः

प्रथमरंग

इति प्रथमरंगः समाप्तः ।

द्वितीयरंगः



इति जीवाजीवाधिकारः समाप्तः

( अथ कर्तृकर्माधिकारः )


इति विषयानुक्रमणिका समाप्ता।




इति प्रकरणसूची समाप्ता



नमः सिद्धेभ्यः ।

# सनातनजैनग्रंथमाला ।

३.

श्रीमद्भगवत्कुंदकुंदाचार्यविरचितं

# समयप्राभृतं ।

मंगलाचरणं ।

**वंदित्तु सव्वसिद्धे धुवममलमणोवमं गदिं पत्ते**
**वोच्छामि समयपाहुडमिणमो सुदकेवलीभणिदं ॥ १ ॥**

वंदित्वा सर्वसिद्धान् ध्रुवामचलामनौपम्यां गतिं प्राप्तान् ।
वक्ष्यामि समयप्राभृतमिदं श्रुतकेवलिभणितं ॥ १ ॥

## तात्पर्यवृत्तिः ।

वीतरागं जिनं नत्वा ज्ञानानंदैकसंपदं ।
वक्ष्ये समयसारस्य वृत्तिं तात्पर्यसंज्ञिकां ॥ १ ॥

अथ शुद्धपरमात्मतत्त्वप्रतिपादनमुख्यत्वेन विस्तररुचिशिष्यप्रतिबोधनार्थं श्रीकुंदकुंदाचार्यदेवनिर्मिते समयसारप्राभृतग्रंथे अधिकारशुद्धिपूर्वकत्वेन पातनिकासहितव्याख्यानं क्रियते। तत्रादौ **वंदित्तु सव्वसिद्धे** इति नमस्कारगाथामादिं कृत्वा सूत्रपाठक्रमेण प्रथमस्थले स्वतंत्रगाथाषट्कं भवति। तदनंतरं द्वितीयस्थले भेदाभेदरत्नत्रयप्रतिपादनरूपेण **ववहारेणुवदिस्सदि** इत्यादिगाथाद्वयं । अथ तृतीयस्थले निश्चयव्यवहारद्वयकेवलव्याख्यानमुख्यत्वेन **जो हि सुदेण** इत्यादिसूत्रद्वयं । अतः परं चतुर्थस्थले भेदाभेदरत्नत्रयभावनार्थं तथैव भावनाफलप्रतिपादनार्थं च **णाणम्हि भावणा** इत्यादिसूत्रद्वयं । तदनंतरं पंचमस्थले निश्चयव्यवहारनयद्वयव्याख्यानरूपेण **ववहारो भूदत्थो** इत्यादिसूत्रद्वयं । एवं चतुर्दशगाथाभिः स्थलपंचकेन समयसारपीठिकाव्याख्याने समुदायपातनिका । तद्यथा–अथ प्रथमतस्तावद्गाथायाः पूर्वार्द्धेन मंगलार्थमिष्टदेवतानमस्कारमुत्तरार्द्धेन तु समयसारव्याख्यानं करोमीत्यभिप्रायं मनसि धृत्वा सूत्रमिदं प्रतिपादयति ।

**वंदित्तु** इत्यादि । पदखंडनारूपेण व्याख्यानं क्रियते । **वंदित्तु** निश्चयनयेन स्वस्मिन्नेवाराध्याराधकभावत्वेन निर्विकल्पसमाधिलक्षणेन भावनमस्कारेण, व्यवहारेण तु वचनात्मकद्रव्यनमस्कारेण वंदित्वा कान् **सव्वसिद्धे** स्वात्मोपलब्धिसिद्धिलक्षणसर्वसिद्धान् । किं विशिष्टान् **पत्ते** प्राप्तान् कां **गदिं** सिद्धगतिं । कथंभूतां **धुवं** टंकोत्कीर्णज्ञायकैकस्वभावत्वेन ध्रुवामविनश्वरां । **अमलं** भावकर्मद्रव्यकर्मनोकर्ममलरहितत्वेन शुद्धस्वभावसहितत्वेन च निर्मलां । अथवा **अचलं** इति पाठांतरे द्रव्यक्षेत्रादिपंचप्रकारसंसारभ्रमणरहितत्वेन स्वस्वरूपनिश्चलत्वेन च चलनरहितामचलां । **अणोवमं** निखिलोपमारहितत्वेन निरुपमां

स्वभावसहितत्वेन अनुपमा। एवं पूर्वार्द्धेन नमस्कारं कृत्वा परार्द्धेन सम्बन्धाभिधेयप्रयोजनसूचनार्थं प्रतिज्ञां करोति। वक्ष्यामि किं **समयपाहुडं** समयप्राभृतं सम्यक् अयः बोधो यस्य स भवति समय आत्मा। अथवा समं एकीभावेनायनं गमनं समयः। प्राभृतं सारं सारः शुद्धावस्था। समयस्यात्मनः प्राभृतं समयप्राभृतं। अथवा समय एव प्राभृतं समयप्राभृतं। **इणं** इदं प्रत्यक्षीभूतं **ओ** अहो भव्याः कथंभूतं **सुदकेवलीभणिदं** प्राकृतलक्षणबलात्केवलीशब्ददीर्घत्वं। श्रुते परमागमे केवलिभिः सर्वज्ञैर्भणितं श्रुतकेवलिभणितं। अथवा श्रुतकेवलिभणितं गणधरदेवकथितमिति। सम्बन्धाभिधेयप्रयोजनानि कथ्यन्ते। व्याख्यानं वृत्तिग्रन्थः व्याख्येयं व्याख्यानतत्प्रतिपादकसूत्रमिति। तयोः सम्बन्धो व्याख्यानव्याख्येयसम्बन्धः। सूत्रमभिधानं सूत्रार्थोऽभिधेयः तयोः सम्बन्धोऽभिधानाभिधेयसम्बन्धः। निर्विकारस्वसंवेदनज्ञानेन शुद्धात्मपरिज्ञानं प्राप्तिर्वा प्रयोजनमित्यभिप्रायः ॥१॥ अथ गाथापूर्वार्द्धेन स्वसमयमपरार्द्धेन परसमयं च कथयामीत्यभिप्रायं मनसि सम्प्रधार्य सूत्रमिदं निरूपयति—

## आत्मख्यातिः ।

नमः समयसाराय स्वानुभूत्या चकासते ।
चित्स्वभावाय भावाय सर्वभावान्तरच्छिदे ॥ १ ॥
अनन्तधर्मणस्तत्त्वं पश्यन्ती प्रत्यगात्मनः ।
अनेकान्तमयी मूर्तिर्नित्यमेव प्रकाशताम् ॥ २ ॥
परपरिणतिहेतोर्मोहनाम्नोऽनुभावा-
दविरतमनुभाव्यव्याप्तिकल्माषितायाः ।
मम परमविशुद्धिः शुद्धचिन्मात्रमूर्ते-
र्भवतु समयसारव्याख्ययैवानुभूतेः ॥ ३ ॥

अथ सूत्रावतारः वंदित्तु इत्यादि—

अथ प्रथमत एव स्वभावभावभूततया ध्रुवत्वमवलम्बमानामनादिभावान्तरपरपरिवृत्तिविश्रान्तिवशेनाचलत्वमुपगतामखिलोपमानविलक्षणाद्भुतमाहात्म्यत्वेनाविद्यमानौपम्यामपवर्गसंज्ञिकां गतिमापन्नान् भगवतः सर्वसिद्धान् सिद्धत्वेन साध्यस्यात्मनः प्रतिच्छन्दस्थानीयान् भावद्रव्यस्तवाभ्यां स्वात्मनि परात्मनि च निधायानादिनिधनश्रुतप्रकाशितत्वेन निखिलार्थसार्थसाक्षात्कारिकेवलिप्रणीतत्वेन श्रुतकेवलिभिः स्वयमनुभवद्भिरभिहितत्वेन च प्रमाणतामुपगतस्यास्य समयप्रकाशकस्य प्राभृताह्वयस्यार्हत्प्रवचनावयवस्य स्वपरयोरनादिमोहप्रहाणाय भाववाचा द्रव्यवाचा च परिभाषणमुपक्रम्यते ॥१॥ तत्र तावत्समय एवाभिधीयते—

**जीवो चरित्तदंसणणाणट्ठिद तं हि ससमयं जाण ।**
**पुग्गलकम्मुवदेसट्ठिदं च तं जाण परसमयं ॥ २ ॥**

जीवश्चारित्रदर्शनज्ञानस्थितस्तं हि स्वसमयं जानीहि ।
पुद्गलकर्मप्रदेशस्थितं च तं जानीहि परसमयं ॥ २ ॥

तात्पर्यवृत्तिः—**जीवो चरित्त** इत्यादि—**जीवो** शुद्धनिश्चयेन शुद्धबुद्धैकस्वभावनिश्चयप्राणेन तथैवाशुद्धनिश्चयेन क्षायोपशमिकाशुद्धभावप्राणैरसद्भूतव्यवहारेण यथासम्भवद्रव्यप्राणैश्च जीवति जीविष्यति जीवितपूर्वो वा जीवः। **चरित्तदंसणणाणट्ठिद तं हि ससमयं जाण** स च जीवश्चारित्रदर्शनज्ञानस्थितो यदा भवति तदा काले तमेव जीवं हि स्फुटं स्वसमयं जानीहि। तथा हि—विशुद्धज्ञानदर्शनस्वभावनिजपरमात्मनि यद्रुचिरूपं सम्यग्दर्शनं तत्रैव रागादिरहितस्वसंवेदनं ज्ञानं तथैव निश्चलानुभूतिरूपं वीतरागचारित्रमित्युक्तलक्षणेन निश्चयरत्नत्रयेण परिणतजीवपदार्थं हे शिष्य स्वसमयं जानीहि। **पुग्गलकम्मुवदेसट्ठिदं च तं जाण परसमयं** पुद्गलकर्मोपदेशस्थितं च तमेव जानीहि परसमयं। तद्यथा—पुद्गलकर्मोदयेन जनिता ये नारकादिपर्यायास्तेषां उपदेशा व्यपदेशाः संज्ञाः पूर्वोक्तनिश्चयरत्नत्रयाभावात्तत्र यदा स्थितो भवत्ययं जीवस्तदा तं जीवं परसमयं

जानीहीति स्वसमयपरसमयलक्षणं ज्ञातव्यं ॥२॥ अथ स्वगुणैकत्वनिश्चयगतशुद्धात्मैवोपादेयः कर्मबंधेन सहैकत्वगतो हेय इति। अथवा स्वसमय एव शुद्धात्मनः स्वरूपं न पुनः परसमयः इत्यभिप्रायं मनसि धृत्वा। अथवास्य सूत्रस्यानंतरं सूत्रमिदमुचितं भवतीति निश्चित्य विवक्षितसूत्रं प्रतिपादयतीति पातनिकालक्षणं सर्वत्र ज्ञातव्यं ।

**आत्मख्यातिः**—योऽयं नित्यमेव परिणामात्मनि स्वभावे अवतिष्ठमानत्वात् उत्पादव्ययध्रौव्यैक्यानुभूतिलक्षणया सत्तयानुस्यूतश्चैतन्यस्वरूपत्वान्नित्योदितविशददृशिज्ञप्तिज्योतिरनंतधर्माधिरूढैकधर्मित्वादुद्योतमानद्रव्यत्वः क्रमाक्रमप्रवृत्तविचित्रभावस्वभावत्वादुत्संगितगुणपर्यायः स्वपराकारावभासनसमर्थत्वादुपात्तवैश्वरूप्यैकरूपः प्रतिविशिष्टावगाहगतिस्थितिवर्तनानिमित्तरूपित्वाभावादसाधारणचिद्रूपतास्वभावसद्भावाच्चाकाशधर्माधर्मकालपुद्गलेभ्यो भिन्नोऽत्यंतमनंतद्रव्यसंकरेऽपि स्वरूपादप्रच्यवनात् टंकोत्कीर्णचित्स्वभावो जीवो नाम पदार्थः स समयः । समयत एकत्वेन युगपज्जानाति गच्छति चेति निरुक्तेः । अयं खलु यदा सकलभावस्वभावभासनसमर्थविद्यासमुत्पादकविवेकज्योतिरुद्गमनात्समस्तपरद्रव्यात्प्रच्युत्य दृशिज्ञप्तिस्वभावनियतवृत्तिरूपात्मतत्त्वैकत्वगतत्वेन वर्तते तदा दर्शनज्ञानचारित्रस्थितत्वात्स्वमेकत्वेन युगपज्जानन् गच्छंश्च स्वसमय इति । यदा त्वनाद्यविद्याकंदलीमूलकंदायमानमोहानुवृत्तितया दृशिज्ञप्तिस्वभावनियतवृत्तिरूपादात्मतत्त्वात्प्रच्युत्य परद्रव्यप्रत्ययमोहरागद्वेषादिभावैकत्वगतत्वेन वर्तते तदा पुद्गलकर्मप्रदेशस्थितत्वात्परमेकत्वेन युगपज्जानन् गच्छंश्च परसमय इति प्रतीयते । एवं किल समयस्य द्वैविध्यमुद्धावति ॥२॥ अथैतद्बाध्यते—

**एयत्तणिच्छयगदो समओ सव्वत्थ सुंदरो लोगे ।**
**बंधकहाएयत्ते तेण विसंवादिणी होदि ॥३॥**

एकत्वनिश्चयगतः समयः सर्वत्र सुंदरो लोके ।
बंधकथैकत्वे तेन विसंवादिनी भवति ॥३॥

**तात्पर्यवृत्तिः**—**एयत्तणिच्छयगदो** स्वकीयशुद्धगुणपर्यायपरिणतः, अभेदरत्नत्रयपरिणतो वा एकत्वनिश्चयगतः **समओ** समयशब्देनात्मा, कस्मादिति चेत् सम्यगयते गच्छति परिणमति कान् स्वकीयगुणपर्यायानिति व्युत्पत्तेः । **सव्वत्थसुंदरो** सर्वत्र समीचीनः क्व **लोगे** लोके अथवा सर्वत्रैकेंद्रियाद्यवस्थासु शुद्धनिश्चयनयेन सुंदर उपादेय इति। **बंधकहा** कर्मबंधजनितगुणस्थानादिपर्यायाः । **एयत्ते** एकत्वे तन्मयत्वे या बंधकथा प्रवर्तते **तेण** तेन पूर्वोक्तजीवपदार्थेन सह सा **विसंवादिणी** विसंवादिनी कोऽर्थः विसंवादिणी विसंवादिनीकथा प्राकृतलक्षणबलात् पुल्लिंगे स्त्रीलिंगनिर्देशः । विसंवादिनी असत्या **होदि** भवति । शुद्धनिश्चयनयेन शुद्धजीवस्वरूपं न भवतीत्यर्थः । ततः स्थितं स्वसमय एवात्मनः स्वरूपमिति ॥३॥ अथैकत्वपरिणतं शुद्धात्मस्वरूपं सुलभं न भवतीत्याख्याति—

**आत्मख्यातिः**—समयशब्देनात्र सामान्येन सर्व एवार्थोऽभिधीयते । समयत एकीभावेन स्वगुणपर्यायान्गच्छतीति निरुक्तेः। ततः सर्वत्रापि धर्माधर्माकाशकालपुद्गलजीवद्रव्यात्मनि लोके ये यावंतः केऽप्यर्थास्ते सर्व एव स्वकीयद्रव्यांतर्मग्नानंतस्वधर्मचक्रचुंबिनोऽपि परस्परमचुंबंतोऽत्यंतप्रत्यासत्तावपि नित्यमेव स्वरूपादपतंतः पररूपेणापरिणमनादविनष्टानंतव्यक्तित्वाट्टंकोत्कीर्णा इव तिष्ठंतः समस्तविरुद्धाविरुद्धकार्यहेतुतया शश्वदेव विश्वमनुगृह्णंतो नियतमेकत्वनिश्चयगतत्वेनैव सौंदर्यमापद्यंते । प्रकारांतरेण सर्वसंकरादिदोषापत्तेः । एवमेकत्वे सर्वार्थानां प्रतिष्ठिते सति जीवाह्वयस्य समयस्य बंधकथाया एव विसंवादापत्तिः । कुतस्तन्मूलपुद्गलकर्मप्रदेशस्थितत्वमूलपरसमयोत्पादितमेतस्य द्वैविध्यं । अतः समयस्यैकत्वमेवावतिष्ठते ॥ ३ ॥ तथैतदसुलभत्वेन विभाव्यते—

---

१ एतन्मते 'विसंवादिणो' पुल्लिंग एव पाठः ।

सुदपरिचिदाणुभूदा सव्वस्स वि कामभोगबंधकहा ।
एयत्तस्सुवलंभो णवरि ण सुलभो विभत्तस्स ॥४॥

श्रुतपरिचितानुभूता सर्वस्यापि कामभोगबंधकथा ।
एकत्वस्योपलंभः केवलं न सुलभो विभक्तस्य ॥४॥

तात्पर्यवृत्तिः–सुदपरिचिदाणुभूदा इत्यादि । सुदा श्रुता अनंतशो भवति । परिचिदा परिचिता सपूर्वानंतशो भवति । अणुभूदा अनुभूतानंतशो भवति कस्य सव्वस्सवि सर्वस्यापि जीवलोकस्य । कासौ कामभोगबंधकहा कामरूपभोगाः कामभोगाः अथवा कामशब्देन स्पर्शनरसनेंद्रिय भोगशब्देन घ्राणचक्षुःश्रोत्रत्रयं तेषां कामभोगानां बंधः संबंधस्तस्य कथा । अथवा बंधशब्देन प्रकृतिस्थित्यनुभागप्रदेशबंधस्तत्फलं च नरनारकादिरूपं भण्यते । कामभोगबंधानां कथा कामभोगबंधकथा यतः पूर्वोक्तप्रकारेण श्रुतपरिचितानुभूता भवति ततो न दुर्लभा किंतु सुलभैव । एयत्तस्स एकत्वस्य सम्यग्दर्शनज्ञानचारित्रैक्यपरिणतिरूपनिर्विकल्पसमाधिबलेन स्वसंवेद्यशुद्धात्मस्वरूपस्य तस्यैकत्वस्य उवलंभो उपलंभः प्राप्तिर्लाभ णवरि केवलं अथवा नवरि किंतु ण सुलभो नैव सुलभः कथंभूतस्यैकत्वस्य विभत्तस्स विभक्तस्य रागादिरहितस्य । कथं न सुलभ इति चेत् श्रुतपरिचितानुभूतत्वाभावादिति ॥ ४ ॥ अथ यस्मादेकत्वं सुलभं न भवति तस्मात्तदेव कथ्यते–

आत्मख्यातिः–इह सकलस्यापि जीवलोकस्य संसारचक्रक्रोडाधिरोपितस्याश्रांतमनंतद्रव्यक्षेत्रकालभवभावपरावर्तैः समुपक्रांतभ्रांतेरेकच्छत्रीकृतविश्वतया महता मोहग्रहेण गोरिव वाह्यमानस्य प्रसभोज्जृंभिततृष्णातंकत्वेन व्यक्तांतराधेरुत्तम्योत्तम्य मृगतृष्णायमानं विषयग्राममुपरुंधानस्य परस्परमाचार्यत्वमाचरतोनंतशः श्रुतपूर्वानंतशः परिचितपूर्वाऽनंतशोऽनुभूतपूर्वा चैकत्वविरुद्धत्वेनात्यंतविसंवादिन्यपि कामभोगानुबद्धा कथा । इदं तु नित्यव्यक्ततयांतः प्रकाशमानमपि कषायचक्रेण सहैकीक्रियमाणत्वादत्यंततिरोभूतं सत्स्वस्यानात्मज्ञतया परेषामात्मज्ञानामनुपासनाच्च न कदाचिदपि श्रुतपूर्वं न कदाचिदपि परिचितपूर्वं न कदाचिदप्यनुभूतपूर्वं च निर्मलविवेकालोकविविक्तं केवलमेकत्वं अतएकत्वस्य न सुलभत्वं ॥ ४ ॥ अथ एवंतास्य उपदर्श्यते–

तं एयत्तविभत्तं दाएहं अप्पणो सविहवेण ।
जदि दाएज्ज पमाणं चुक्किज्ज छलं ण घित्तव्वं ॥ ५ ॥

तमेकत्वविभक्तं दर्शयेहमात्मनः स्वविभवेन ।
यदि दर्शयेयं प्रमाणं स्खलितं छलं न गृहीतव्यं ॥ ५ ॥

तात्पर्यवृत्तिः–तं तत्पूर्वोक्तं एयत्तविभत्तं एकत्वविभक्तं अभेदरत्नत्रयैकपरिणतं मिथ्यात्वरागादिरहितं परमात्मस्वरूपमित्यर्थः । दाएहं दर्शयेहं केन अप्पणो सविहवेण आत्मनः स्वकीयमिति विभवेन आगमतर्कपरमगुरूपदेशस्वसंवेदनप्रत्यक्षेणेति । जदि दाएज्ज यदि दर्शयेयं तदा पमाणं स्वसंवेदनज्ञानेन परीक्ष्य प्रमाणीकर्तव्यं भवद्भिः । चुक्किज्ज यदि च्युतो भवामि छलं ण घित्तव्वं तर्हि छलं न ग्राह्यं दुर्जनवदिति ॥ ५ ॥ अथ कोयं शुद्धात्मेति पृष्टे प्रत्युत्तरं ददाति–

आत्मख्यातिः–इह किल सकलोद्भासिस्यात्पदमुद्रितशब्दब्रह्मोपासनजन्मा समस्तविपक्षक्षोदक्षमातिनिस्तुषयुक्त्यवलंबनजन्मा निर्मलविज्ञानघनांतर्निमग्नपरापरगुरुप्रसादीकृतशुद्धात्मतत्त्वानुशासनजन्मा अनवरतस्यंदिसुंदरानंदमुद्रितामंदसंविदात्मकस्वसंवेदनजन्मा च यः कश्चनापि ममात्मनः स्वो विभवस्तेन समस्तेनापि अयमेकत्वविभक्तमात्मानं दर्शयेहमिति बद्धव्यवसायोस्मि । किंतु यदि दर्शयेयं तदा स्वयमेव स्वानुभवप्रत्यक्षेण परीक्ष्य प्रमाणीकर्तव्यं । यदि तु स्खलेयं तदा तु न छलग्रहणजागरूकैर्भवितव्यं ॥ ५ ॥

